जें चं॰प्र॰
८०

त्रयोदश्यां भूतव्या वा महानिशा शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा इत्येतद्वचनविरोध इति न वाच्यम् तत्र
अस्य वचनस्य महानिशाव्याप्तिग्राह्यः किंतु नक्षत्रादीनां वेध इत्येतद्विषयत्वात् नन्वेवंविधोपवासे परे
न्हि चतुर्दश्यां किंचिदपि दोषस्पर्शो नास्तीति निर्णयः स्यात् न तत्र निशि निर्णये पारणं स्यात् तदप्युक्तम् सर्वेष्वेवो
पवासेषु दिवा पारणमिष्यते इति वचनात् तथा च अन्यत्रापि ब्राह्मणो रात्रौ नाम स स्नातोऽसौ दिवा नाम से पारणं कु
र्यान्नाम संगतिमाप्नुयादिति वचनाच्च रात्रौ भुक्तानुपर्वणीत्यमावास्यायां रात्रिभोजननिषेधाच्चेति अतो
धिकप्रदोषव्यापिन्यां न पूर्वविद्धायां न पूर्वविद्धायां तु चतुर्दश्यां उपवासः परत्र पारणनिषेधादिति चेन्मैव
अत्र विधिः निर्णये दिवस एव पारणं कार्यं तथोक्तं लिङ्गे सा तु यामत्रयं पर्यन्तं व्यापिनी चेत्परेऽहनि दिवैव पारणं
कुर्यात्पारणे नैव दोषभाक् इति उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणं सिक्थे सिक्थे अश्वमेधस्य फलं प्र
प्नोति मानव इति तथा च यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणमित्यादीनि चैतद्विषयाणि अथ चतुर्दशी यदि
अधिकप्रदोषव्यापिनी चतुर्थी तु परे वोपवासे ग्राह्या स्मृतिसंग्रहे पूर्वा पूर्वा शिवारात्रौ रोहिण्यप्यग्निर्बलिः स
रः शिवः परो निष्परिशिष्टश्चासा वह्निर्भुजिदमेति अस्यार्थः पूर्वा स्निग्धपोन पूर्वाः पूर्वभागे तयासां ततः पूर्वा
पूर्वा रोहिणीति जन्माष्टमी अग्निः प्रतिपत् बलिर्द्वितीया स्मरः अनंगत्रयोदशी शिवचतुर्दश्यां विशेषमाह
परः शिवः अन्तिमदिने चतुर्दशी निशि स्पृशेत् नष्टा नो भवेत् चेत् तदा सौऽन्तिदिने भुजिष्यमानस्यादतः
परैव कार्येत्यर्थः मोदेश्वरनिबंधे अपराह्णे त्रयोदश्यामनंतरं चतुर्दशी उपेक्ष्य मे जागरणं परेण रात्रौ कामवो
धिनीति उभयत्र प्रदोषव्यापिनी पंचमीतु परे वोपवासे मान्या पूर्वविद्धा निषिद्धा तदुक्तम् माघासिते भू

1

८०

- Title – निबन्ध चूडामणि चन्द्र प्रकाश
- Accession No – Title –
- Accession No –
- Folio No/ Pages – 11/22 – 80-86, 112, 135 – –
- Lines-
- Size
- Substance Paper –
- Script Devanagari
- Language – संस्कृत
- Period –
- Beginning – त्रयोदश्यां भूतव्या महानिशा शिवरात्रि व्रतं तत्र कुर्याज्जागरणं
- End – सपिंडीकरणादूर्ध्वं ... भवन्त्यथ ...
- Colophon-
- Illustrations -
- Source -
- Subject - ज्योतिष
- Revisor -
- Author -
- Remarks- अपूर्ण है

अशुद्ध

ॐ वं॰प्र॰
८०

त्रयोदश्यां भूतव्याप्ता महानिशा शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा इत्यनेन वचनविरोध इति न वाच्यम् अ
स्य वचनस्य महानिशाव्यापिग्राह्यः किंपुनस्तन्नोड्डीशवेधः इत्येतद्विषयत्वात् नन्वेवं विधोपवासे परे
द्यु चतुर्दश्यां किंचित्तद्दोषस्पर्शो द्वाज्ञो तिथ्यन्तः स्यात् ननु निशि तिथ्यन्ते पारणं स्यात् तच्चायुक्तम् सर्वेष्वेवो
पवासेषु दिवा पारणमिष्यते इति वचनात् तथा च अन्यत्तिथ्यागमो रात्रौ नामसत्स्वेव सोऽदिवा नामसे पारणं कु
र्यात् नामसी गतिमात्रयादिति वचनाच्च रात्रौ भुक्तानुपर्वणीत्यमावास्यायां रात्रिभोजननिषेधाच्चेति अतो
धिकप्रदोषव्यापिन्यां न पूर्वविद्धायां न पूर्वविद्धायां तु चतुर्दश्यामुपवासः परत्र पारणनिषेधादिति चेन्मैवं
अत्र विधिः तिथ्यन्ते दिवस एव पारणं कार्यं तथोक्तं लिङ्गे स्नात्वं मन्न पर्यन्तं व्यापिनी चेत्परेहनि दिवैव पारणं
कुर्यात्पारणे नैव दोषभाक् इति उपोषणं चतुर्दश्यां चतुर्दश्यान्तु पारणं सिक्थे सिक्थे अश्वमेधस्य फलं प्रा
प्नोति मानव इति तथा च यामत्रयोर्ध्वगामिन्यां प्रातरेव हि पारणमित्यादीनि वेलद्विषयाणि अथ द्वितीयेऽह्नि
अधिकप्रदोषव्यापिनी चतुर्दशी तु परैवोपवासे ग्राह्या स्मृतिसंग्रहे पूर्वा पूर्वोत्तिथिर्वारा रोहिण्यग्निर्वेलिः स्म
रः शिवः परो निष्परिश्रयेच्छाखा वह्निर्भूजिदष्टमेति अस्यार्थः पूर्वा तिथ्यथ योग पूर्वाः पूर्वभागे तथासां ततः पूर्वा
पूर्वा रोहिणीति जन्माष्टमी अग्निः प्रतिपत् वह्निर्द्वितीया स्मरः अनंगत्रयोदशी शिवचतुर्दश्यां विशेषमाह
परः शिवः अग्रिमदिने चतुर्दशी निशि व्याप्ति स्पष्टेन नन्दनोऽभवेत् चेत् तदा सोऽग्रिमदिने भूजिदष्टमान स्यादतः
परैव कार्येत्यर्थः मोक्षेश्वरनिबंधे अपराह्ने त्रयोदश्याम्मन्तु तत्र चतुर्दशी उपोष्यमेत्यागमत्र परेनरात्रौ कामवो
धिनीति उभयत्र प्रदोषव्यापिनी पंचमी तु परैवोपवासे मान्या पूर्वविद्धा निप्राक्ती तदुक्तम् माघासितेभू

८०

रात्रिव्रतमित्युक्तम् तथाच स्कंदे एवं द्वादशवर्षाणि शिवरात्र्युपोषकः यामं गोरात्रौ मनुजः स्वर्गमारु
हेत् शिवं च पूजयित्वा च यो वा रये दिति दिनत्रयसाध्यमिदं व्रतम् । अस्यामरे एवर्थां सकलाहोरात्रव्यापि।
न्यां न विप्रतिपत्तिः उदयादारभ्य पुनरुदयपर्यंतं व्याप्ते दिनद्वयवर्तिन्यां खंडायां तु परस्परविरुद्धानि स्मृति
पुराणवचनानि श्रूयंते तेषां च विरोधपरिहाराय तत्र द्विपयभेदेन व्यवस्थोच्यते तथाहि शिवरात्रिर्द्विविधा
अल्पविद्धा च तत्र अल्पायां न संदेहः विद्धा तु पुनः षोढा पूर्वदिन एव प्रदोषव्यापिनी न द्वितीये १ द्वितीयदि
न एव प्रदोषव्यापिनी न प्रथमदिने २ या च पूर्वदिने प्रदोषमधिकं व्याप्नोति द्वितीयदिने प्रदोषं स्वल्पं ३
स्पृशति ३ द्वितीयदिने प्रदोषमधिकं स्पृशति पूर्वस्मिन्स्वल्पं ४ या उभयत्र संपूर्णं प्रदोषं व्याप्नोति ५ या नो
भयप्रदोषं स्पृशति ६ अल्पायां सहस्रधा तत्र अल्पायां न विवादः विद्धाभेदेषु तु पूर्वदिन एव प्रदोषव्या
पिनी द्वितीयदिन एव प्रदोषव्यापिनी च प्रदोषव्यापित्वादुभे एवोपोष्ये तदुक्तं शिवपुराणे प्रदोषव्यापि
नी ग्राह्या शिवरात्रिः शिवप्रिये रात्रौ जागरणं यस्मात्तस्मात्तामुपोषणमिति प्रदोषोत्र चतुर्घटिकात्मा।
कोज्ञेयः चतसृष्वेव नाडिकास्विति वक्ष्यमाणत्वात् पूर्वदिनेधिकप्रदोषव्यापिनी तृतीया तु पूर्वैवोपवा
से ग्राह्या अधिकप्रदोषव्यापित्वात् उक्तं च माघफाल्गुनयोर्मध्ये या स्याच्छिवचतुर्दशी अनंगेन समा
युक्ता कर्तव्या सा सदा तिथिः तथा च त्रयोदशी पत्नी गे स्युर्यै चतसृष्वेव नाडिषु भूतविद्धा तु या तत्र शिवरात्रि
व्रतं चरेदिति जयंती शिवरात्रिश्च कार्ये भद्राजयान्विते इति च कृष्णपक्षेष्टमी चैव त्याज्यदिव श्रावणी दुर्गा।
नवमी तथा दूर्वाष्टमी च या पूर्वविद्धा तु कर्तव्या शिवरात्रिर्बलेर्दिनमिति तत्र चतुर्थ्यां वेधपक्षे भवेद्यत्र

2

ॐ चं० प्र० माघमासस्य व्यतिरिक्तशिवचतुर्दशीव्रते तु पूर्वदिन एव प्रदोषव्यापिनी न परदिन एव प्रदोषव्यापिनी नोभयत्र प्र-
८१ दोषव्यापिन्यां व्रते स्वीकार्यं नन्वत्रार्द्धरात्रानुसरणाद्धि दिनद्वये शिवरात्रिशब्दोक्तत्वात् माघचतुर्दश्यां वर्त्तत इति चे-
त्सत्यम् न केवलं तस्या योगेन च पंक्तजशब्दवर्त्तनं वर्त्तते तथान्यशिवरात्रिष्वपि योगे न वर्त्तनात् को दोषः न तु यो-
गत्तस्य योगमपहरतीति चेन्न नायं सर्वत्र नियमः तथा चार्द्धरात्रानुसरणात् जयायोगे शिवरात्रिः पूर्वविद्धा कार्येति
वाक्यस्य कोऽर्थः अर्द्धरात्रादूर्द्ध्वं जयायोगे परा कार्येत्यस्य कोऽर्थः तुल्यबलान्माघचतुर्दश्येव विद्धोपोष्या 3
इत्यन्योऽर्थः माघचतुर्दश्यन्यशिवरात्रियोगेनैव निर्णय इति चतुर्थोऽर्थः तथा चाथ पराकस्थाने भवत्पदेक-
स्य नागोऽखं वाक्यमेतस्य प्रसज्येत यत्तु क्रमधरराजानुसरणाद्वेति प्रदोषव्यापिनी ग्राह्येत्येतयोर्विरोधे यथा-
पि पूर्ववाक्यं द्वितीयेन्हि प्रदोषव्यापित्वाभावेप्युपपद्यते उत्तरवाक्यं वार्द्धरात्रादुपरि जयायोगेपि तथापि पू-
र्वविद्धाविधायकबहुवाक्यसंकोचप्रसंगात्सा ग्राह्येति तदुक्तम् उत्तरविद्धाविषयबहुवाक्यसंकोचेपि दोष-
स्य तादवस्थ्यात् किंच पूर्वविद्धावाक्यानामुक्तविषयेष्ववकाशोऽस्ति उत्तरविद्धावाक्यानि तद्विषयाण्येवे-
ति निरवद्यम् ननु यामचतुष्टये चतुर्दश्यां जागरणपूजादिकं स्यादिति बहुकालव्यापिनी ग्राह्येति चेत्स-
त्यम् प्रदोषव्यापिन्यामपि शिवरात्रिः परा भवेदित्यादिवचने यामचतुष्टये परविद्धापि संपूर्णा स्यादिति
तस्यामपि पूजाजागरणादिनिर्वाधः तद्व्रते बुधैरस्मादपि प्रदोषव्यापिनी विशेष इति निर्विवादितव्यात्र
यतानि परविद्धाविधायकवाक्यानि प्रदोषव्यापिनी ग्राह्येत्यादिपूर्वमुक्तं तथा प्रदोषव्यापिनी भूततिथि-
र्द्दर्शितिथिः परम् उपोष्यास्सा प्रयत्नेन प्रदोषेन यदा कुहूः माघासितेभूतलिंगे वेष्पादिने दिके स्थेरः माघो
तुर्दशी दिनदद्वशा नम पोष्य षोडशपदमभूपेति गोत्रमिः भूतसंज्ञा तिथेरंते प्राकीड द्विदशपले शिवरात्रिः
८१

तदिनं हि राजन्नुपैति योगं यद्दिपंचदश्या जयाप्रयुक्तां नतु तन्न कुर्यात् धवस्य रात्रिं प्रिमतो गोत्रस्येति तथा च शिव
रात्रिव्रते भूतां कामविद्धां विवर्जयेत् इति च ननु पूर्वदिने चतुर्दश्याः सकलरात्रिव्याप्तत्त्वेन तत्रैव कुतो नोपवास
उक्त इति चेत् सत्यम् पूर्वदिने उपोषिते परदिने दिवा तिथ्यंताभावेन पारणासंभवात् ननु च त्राविसात्वसत्म
नपर्यंतं व्यापिनी चेत् परे हनि स्यादिति स्यायो द्विति चेन्न न ऋजु त्र परदिने पिसंपूर्णप्रदोषव्यापित्वे नोपवास
स्यविधानात् किं चात्र व्रते प्रदोषव्याप्तिर्बलवतीन तत्प्रदोषव्याप्तानां त्रयोदशी विद्धानामर्थतः प्रदोषा
व्याप्तत्वेनैव निषेधात् त्रयोदशी विद्धानिषेधो निरवकाशः उभयत्र प्रदोषव्यापिन्यां पूर्वविद्धायामेवावकाशं ल
भते निरवकाशविधेर्बलित्वात् नोभयत्र प्रदोषव्यापिनी सतीतु पूर्वैवोपोष्या तथा च व्रतराजेवेव तत्र सूर्या
स्तेन वनाडीषु भूतविद्धा त्रयोदशी शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथेति अस्माद्विधेरेवात्र त्रयोदशी
विद्धानिषेधो नावकाशं लभते अतः पूर्वोक्तविषयएव अत्र केचिदुच्यते ननु दिनद्वयेपि प्रदोषव्या
पिन्यां परदिनएव प्रदोषव्यापिन्यां परदिनएवाधिकप्रदोषव्यापिन्यां च परदिनएवोपवास इति यदुक्त
ं तेन घामूढभाषितम् यतो ऽर्द्धरात्राद्धस्तादुभयत्र चार्द्धरात्रे या चतुर्दश्या जयायोगे पूर्वैवोपोष्या अर्द्ध
रात्रादूर्द्धं तद्योगे ऽपरोपोष्येति व्यवस्था जयाप्रयुक्तां न तु जातु कुर्यादिति निषेधस्य चार्द्धरात्रे त्रयोदश्यायो
गविषयत्वमिति अत्र ब्रूमः पूर्वोक्तपदत्रयेपि परेवोपोष्या इत्यवश्यमङ्गीकार्यम् पूर्णप्रदोषव्यापिन्यामु
पवासविधायकानां चास्या विधायकवक्ष्यमाणवाक्यबलात् अन्यथा तैः सह विरोधः स्यात् द्वेधेव हूनां व
चनं कार्यमिति बहुवाक्यविरोधपरिहाराय यान्यपान्तपपन्याऽर्द्धरात्रान्तुरस्तां च्चेतस्यैव वाक्यस्य विषयांतरं

स्था

ओं चं० प्र०
८२

अंगारकचतुर्दशी गोयुगवाहिनी पूर्वापरा वा कार्या मासे चतुर्दश्यां तु नक्ताशी वर्षान्ते गोयुगं दद्यात् शैवं पदम्
वाप्नोति त्रैपंचकमिदं स्मृतम् कूर्मपुराणे शुक्लपक्षे फाल्गुनस्य तदारभ्य विचक्षणः रौद्रं व्रतं चतुर्दश्यां कृत्स्नमप्
देवि शोभने एकमेव कृतं हन्ति कृतपापानि नित्यशः न विप्रे कृष्णाष्टमीं तु नक्तेन तथा कृष्णचतुर्दशीं इह भो
गानवाप्नोति परत्र शिवम् गच्छति तथा कृष्णः चतुर्दश्यां तथा पूर्ण्यां पक्षयोः शुक्लकृष्णयोः यो द्वयमेकं नभुंजीत स
प्रोक्तं शिवार्चनपरः शुचिः यत् पुण्यमक्षयं सततं सत्रयाजिनाम् ततः पुण्यं सकलं तस्य शिवलोकं च गच्छति अथ शिव
पूजोपयुक्तं किंचिदुच्यते चतुर्दशीव्यतीपाते ग्रहणे संक्रमे तथा युगादिषु एषु कालेषु यावज्जीवं शिवार्चनम् वं
न विद्ये स्फुटं निर्वहते यस्य यावज्जीवं शिवार्चनम् मनुष्यचर्मणा वद्धः स रुद्रो नात्र संशयः आकाशं लि
गमित्याहुः पृथिवी तस्य पीठिका आलयः सर्वभूतानां लयनाल्लिङ्गमुच्यते लिङ्गपुराणे अनेकजन्मसाह
स्रं भ्राम्यमाणस्तु योनिषु कः समाप्नोति वै भक्तिं न रो लिङ्गार्चनाहते स्कन्दे गौरीं प्रति शिव उवाच सर्वेन्द्रियप्रस
क्तोपि विमुक्तः सर्वपातकैः संप्रयाति शिवं देवि लिङ्गं योर्चयते हि सः वर्षशतं समभ्यर्च्य एकदिने लिङ्गार्चने
समं मतमिति तत्रैवोक्तम् मनसा चिन्तयेद्यस्तु पूजयेयं परं शिवम् अशक्तो नास्ति वा द्रव्यं तस्य नित्यं सुमध्य
मे सततं पापास्तु पापयुक्तोविमुक्तः सर्वपातकैः शिवलोकमवाप्नोति देहभेदेन संशयः मद्रस्य गोरक्षकृत्तिं दं का
स्यताम्रमयं तथा कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतं दिवि पार्थिवं सर्वकामदमित्यागमः स्फाटिकं च मत्स्य
पुराणे एवं स्वर्णमयं कुर्यात्स्फाटिकं पार्थिवं तथा शुभं दारुमयं वापि शैलं वा मनसि वर्त्तते अन्यथा लिङ्गकरम
अथ वक्ष्यामि कर्कशमतिं तु द्रुमतिः स्थूलं विपिंडिकां अपिंडिकाहीनं विषमे वर्णाव्यंगं पिंडिकं मानोन्नमो
नोन्मानहीनं पिंडिकं च निषिद्धमिति हरिनाथनिबन्धे नार्मदं च प्रभासं ... नाक्रीडमानोपि लिङ्गं कुर्यात्तयो
सप्र ० बंग

5

साङ्गोपाङ्गहयमेधफलप्रदा सूर्यास्तमनवेलायां कलाप्येका चतुर्दशी पि[illegible]स्यां प्र[illegible]लु सा ज्ञेया शिवसंतोषकारिणी।
इति स्कंदे चतुर्दशी चतुर्दश्यां रात्रौ भूता यदा भवेत् तत्रोपवासं कुर्वीत न[illegible]मप्युतेऽहनि लिंगपुराणे दर्शत्रयोद
शीव्याप्त प्रदोषा त्वनुमयीस्यजेत् भूतप्रदोषिनीं कुर्यात् दमायां पारणोचिता इत्यादीनि यानि परविद्धव्रतप्रतिपा
दकानि तानि परदिने स्तमयोर्ध्वभावि चतुर्नाड्यादिव्याप्तिविषयाणि दिवातिथ्यंताभावविषयाणि च ज्ञेयानि तदुक्तं
त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी अस्य व्याख्या रामकौतुके
दिवसभोजनानुरोधेन यस्यां त्रयोदश्यां प्रदोषिताया तिथ्यंते विहितं पारणं रात्रौ न भवति सा दिनभुक्तिप्रमा
णमित्युच्यते द्वितीयदिने दिवापारणाय पर्याप्तस्तिथ्यंतो न लभ्येत यस्यां सैवोपोष्या सा यदा भवति तदा निशि जाग
रे शिवरात्रिः स्यादिति तथा च कृष्णाष्टमी स्कंदषष्ठी शिवरात्रिश्चतुर्दशी एताः पूर्वयुताः कार्यास्तिथ्यंते पार
णं भवेत् जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च पूर्वविद्धैव कर्तव्या तिथिभांते च पारणमिति च अत्रापि दिवा
तिथ्यंते पारणं कार्यम् असंभवे तु दिवातिथ्यंताभावेपि दिवैव पारणं कार्यं यानि तु पूर्णा त्रयोदशी रात्रिर्यममा
त्रे चतुर्दशी चतुर्दश्युपवासी यश्चतुर्दश्यां च पारयेत् सिक्थे सिक्थे फलं तस्य न जाने हं वरानन इत्यादीनि
वाक्यान्यप्रमाणानि[illegible]वाक्यविरोधान्मोदेश्वरादिनिबंधेषु उपेक्षणीयानीत्युक्तम् कालादर्शकारादिभि।
र्जटाभस्मादिपाशुपतव्रतचारिविषयाणीति निर्णीतं उभयत्र प्रदोषव्यापित्वे पूर्वविद्धायां वा ज्ञेयानि
मासिकचतुर्दशीनिर्णयेप्येवम् भाद्रे कृष्णचतुर्दश्यां मासिका शीसजागरः उक्तोभ्यो वा शिवप्रीत्यै सोपवा
सस्य दुर्भरं इत्यस्य दुर्भरस्यापि शिवरात्रेरिव निर्णयः शिवरात्रेरिव प्रोक्तो दुर्भरस्यापि निर्णयः परादमन।
कारव्या तदुक्तम् अंगारकस्य कर्तव्या भौमयोगाच्चतुर्दशी पूर्वोक्तत्र विचारोस्याः प्रोक्तो नैव मनीषिभिः ॥
चैव कृष्णा चतुर्दशीति दुर्भरव्रतं भाद्रपदकृष्णचतुर्दशीकथने प्रोक्तम् १५

6

॥ ओम् चं॰ प्र॰ सावित्रीव्रतं च वक्ष्यमाणं भाद्रपूर्णमास्यां अथ विशेषः तत्र चैत्रे पूर्णमास्यां शाक्रपूजा चित्रानक्षत्रयुतायां चा
८२ स्यां चित्रवस्त्रादि देयम् तथा च देवीपुराणे पौर्णमास्यां समाकार्या सर्वकामसमृद्धये इंद्राय सहसाध्या
न यं कामि कं लभते फलमिति विष्णुस्मृतौ चैत्रीं चित्रायुतां चेत्स्यात्तस्यां चित्रवस्त्रदानेन सौभाग्यं वस्त्रं चा
प्नोतीति अत्रैव ब्रह्मपुराणे विशेष उक्तः मंदे चार्के गुरौ वापि वारे क्षेत्रे शुचौ त्रिको तत्राश्वमेधजं पुण्यं स्ना
नेन लभते नरः दानमक्षयतां याति पितॄणां चैव तर्पणमिति अत इयं शनिगुरुरविवारेषु महापुण्यात्र
स्यामेव दमनार्केणाखिलान्सुरानभ्यर्च्य संवत्सरकृतार्चनफलभाग्भवेत् तथा च लिंगपुराणे चैत्रेमा
सि सिते पक्षे पंचदश्यां यथाविधि दमनेनार्चयेद्देवानक्ष्मीभूतयो रते इति वायुपुराणे संवत्सरकृ
तार्चायाः साफल्यायाखिलान्सुरान् दमनेनार्चयेच्चैत्र्यां विशेषेण सदाशिवमिति इति चैत्रीनिर्णयः
वैशाखपूर्णमास्यां कृष्णमृगाजिनं दत्वाखिलपृथ्वीदानफलमवाप्नुयात् तदुक्तं यमगाथासु यस्तु कृ
ष्णाजिनं दद्यात्सखुरं शृंगसंयुतम् तिलैः प्रच्छाद्य वासोभिः सर्ववस्त्रैरलंकृतं वैशाख्यां पौर्णमास्यां तु
वैशाख्यां सविशेषतः ससमुद्रगुहा तेन सशैलवनकानना सप्तद्वीपान्विता दत्ता पृथिवी नात्र संशयः
इति विष्णुरपि कृष्णाजिनं तिलान्दत्वा हिरण्यं मधुसर्पिषा ददाति यस्तु विप्राय सर्वं तरति दुष्कृतं इति
विधिः विस्तरस्तु दानग्रंथेषु द्रष्टव्यः कल्पतरौ दानकांडे च वैशाख्यामेव विधिवद्भोजयेद्ब्राह्मणान्दश त्रि
रात्रमुषितः स्नात्वा कृशरां प्रयतः शुचिः गौरान्वा यदि वा कृष्णान्स्तिलान्क्षौद्रेण संयुतान् दत्वा दशसु वि
प्रेषु तानेव स्वस्ति वाचयेत् प्रीयतां धर्मराजेति पितॄन्देवांश्च तर्पयेत् [illegible] वज्जीवकृतं पापं तत्क्षणादेव मुं
नानेन सह
चति छत्रतायुतानि तिष्ठेत स्वर्गलोके न संशयः इति जावालिः अन्न[illegible]ककुंभं च वैशाख्यां च विशेष

७

ॐ

नरः पुण्यान्माल भते राज्यं सुसंपन्नमकंटकम् अथ नामानि ॐ शं भवायेत्यादि इति वैदिकमंत्रेण वा ॐ नमः शि-
वायेति शिवस्य षडक्षरमंत्रस्य वामदेव ऋषिर्गायत्री छंदः शिवो देवता शिवप्रीत्यर्थे जपे विनियोगः षडक्षरेणैव
निषिद्ध वर्ज्यं विहितगंधपुष्पादिभिः प्रतिमायां लिंगे वा शिवमर्चयेत् पूर्वोक्तलिंगेषु इति शिवरात्रिः ॥ चतुर्दश्यां
शस्त्रवधादिकर्म कार्यम् तदुक्तं चतुर्दश्यां चतुर्थ्यां च नवम्यां कारिमर्दनमिति वचनात् चतुर्दशी शनिवा-
रेण मिश्रा रविवारेण विरुद्धा अत्र क्षौरक्रियां दंतधावनं च वर्जयेत् सर्वेषु यात्रां च वर्जयेत् । विशेषतो वा
यथा सु योगिनी साम्मुख्यात् मीनस्थे क्रूरग्रहे चतुर्दशी पूर्णिमा चामावास्यायां सर्वासु चतुर्दशीषु तिथि-
पतित्वाच्छिवः पूज्यः ॥ ७ ॥ दुर्गाद्युपाध्यायधराभिधस्य पुत्रेण श्रीचंद्रमसा कृते स्मिन् चंद्रप्रकाशे सुनिबं-
धमौलौ चतुर्दशी निर्णय एव जातः ॥ अथ पौर्णमासी निर्णयः पौर्णमासी चतुर्दशीयुता मान्या सावित्रीव्र-
ते अन्याः परयुता । तथाहि सावित्रीव्रतविषये पाद्मवचनम् पूर्वविद्धान्तकर्तव्या सावित्रीव्रतिभिर्नरैः पौर्ण-
मासी महीपाल पुराणे निश्चयंगता एतत्सावित्रीव्रते अन्यपूर्णिमायां ब्रह्मवैवर्तवचनम् भूतविद्धानक-
र्तव्या दर्शः पूर्णिका दाचन वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तममिति अनेन वटपूर्णिमा पूर्वविद्धैव प्र-
तीयते अन्यास्तु प्रतिपद्युतैव तथा चोक्तम् एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी अमावास्या तृतीया
च ता उपोष्याः परान्विता इति कृष्णपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविरिति च यत्तु ब्रह्मवैवर्ते ब्रह्मपुराणे
च वाक्यम् प्रतिपत्पंचमी भूतसावित्री वटपूर्णिमा नवमी दशमी चैव नोपोष्याः परसंयुता इति षष्ठ्येकाद-
श्यमावास्या पूर्वविद्धा तथाष्टमी पूर्णिमा परविद्धा च नोपोष्यं तिथिपंचकमिति तेनापि सावित्रीव्रतविषये

ॐ चं० प्र० ८४

दुक्तं याज्ञवल्क्येन अध्यायानामुपाकर्म श्रावण्यां श्रवणेपि च हस्तेनौषधिभावे च पंचम्यां श्रावणस्य तु इति अ
अध्यायानामिति बहुवचनं शाखाभिप्रायेण इदं चोत्सर्जनं निरग्नेरपि समाचारप्राप्तं दृश्यते उपाकर्मणि चौ
पासनिकस्य शिष्यानध्यापयतः आवसथ्याग्नावेव अनध्यापयतो नाधिकार इति केचिदुपाध्यायादयः यद्व्रल
चारिणां तु पुरस्कृत्योपाकर्म लौकिकाग्नौ प्रवर्तते न स्वसमाचारं विना मूलं न दृश्यते श्रावणकर्मरूपत्वनिरग्ने
रप्यपौर्णमास्यां तिथौ श्रावणीकर्मानंतरमुत्सर्जनं क्रियते तदुक्तं पूर्वाह्णे वार्षिकं कर्म समाप्य विधिपूर्वकम् उ
त्सर्जनं च मध्याह्ने नापराह्णे कदाचनेति निरग्नेस्तु श्रावणीकर्मकरणाभावान्मातरे वोत्सर्जनं कार्यम् खंडे।
तिथौ तु प्रतिपद्योगो द्योगाः सर्वे श्रावणीकर्मकर्तव्यत्वोपपत्तेः चतुर्दशीविद्धायां पूर्णमास्यां श्रावणीकर्मेति
वर्त्योत्तरेद्युः साग्निना पुनरुत्सर्गः कार्यः अतः प्रातरुत्सर्गप्रतिपादकानि पूर्णातिथौ निरग्निविषयाणि खंडेति
थाउभयविषयाणि इति विश्वरूपसंप्रदाये संप्राप्ते श्रावण्यां तु पौर्णमास्यामिनोदये स्नानं कुर्वीत मति
मान् श्रुतिस्मृतिविधानतः ततो देवान्पितॄंश्चैव तर्पयेत्परमांभसा उपाकर्मदिने चोक्तमृषीणामेव तर्पणम्
कुर्वीत ब्राह्मणः श्राद्धं वेदान्हि दृश्यशाक्तितः इति भविष्योत्तरवचनम् श्राद्धमत्राभ्युदयिकमुपाकर्मनिमि
त्तं प्रथमप्रयोग एव न प्रतिवर्षम् असकृद्यानि कर्माणि क्रियेरन्कर्मकारिभिः प्रतिप्रयोगं नैताः स्युर्मातरः
श्राद्धमेव चेति परिशिष्टवचनात् उत्सर्जननिमित्तमाभ्युदयिकं न भवत्येव एवं सदाचारोपि दृश्यते गुरु।
शुक्रास्तमनादिदोषोपि प्रथमप्रयोग एव न प्रतिवर्षं इनोदये स्नानं न कुर्वीतेति यत्र स्नाने विहितं तन्मा
ध्याह्निकमुपलक्षयतीति प्रातःकर्मणः सूर्योदयमभिव्याप्य वर्तमानत्वात् अतः पूर्वाह्णेपि माध्याह्निकं
कृत्वोत्सर्गः कार्यः तथा च परिशिष्टे छंदोगमितिताः कुर्युः प्रातरोत्सर्गं वाह्वेयां अपराह्णे ह्युपाकर्मप्रथम

तः निर्दिष्टधर्मराजाय गोदानफलमाप्नुयात् सुवर्णतिलयुक्तैश्च ब्राह्मणान्सप्त पंच वा तर्पयेदुदपात्रैस्तु ब्रह्मह
त्यां व्यपोहति महाभारते वैशाखपौर्णमास्यां च तिलान्दद्याद्द्विजातिषु । शंखभद्रायिनव्यासः संपदो लभते च
नैः कार्यस्तत्तमिच्छद्भिः श्रेयः सर्वोत्तमं गृहे इति वैशाखपूर्णिमानि० । ज्येष्ठपूर्णमास्यां तिलदानं महाय
ज्ञफलदं छत्रोपानहादिदानं च प्रशस्तम् तथा चादित्यपुराणे ज्येष्ठपूर्णमासि तिलदानं महायज्ञफलदं
दद्यात्पौर्णमास्यां विशेषतः अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशय इति विष्णुरपि ज्येष्ठे ज्येष्ठायुतायां चैव तस्यां छ
त्रोपानत्प्रदानेन नरो नराधिपतामाप्नोति इति ज्येष्ठपूर्णिमानि० । आषाढपौर्णमास्यां चतुर्दश्यां कृतोपवासेन
जनेन भगवन्नारायणः पूज्यः ब्रह्मपुराणे चतुर्दश्यामुपोष्याथ पौर्णमास्यां यजेद्धरिमिति तथा च पूर्वाषाढान्वि
तायां च तस्यां अन्नदानादिकार्यम् तथा च विष्णुः आषाढ्यामाषाढयुतायामन्नपानादिदाने तदेवाक्ष
यमाप्नोति इत्याषाढपूर्णिमानि० । श्रावणपौर्णमास्यां श्रवणान्वितायां स्नानं जलक्रीडादिकं सामवेदश्रवणं च
कार्यं तथा च ब्रह्मपुराणे श्रावण्यां श्रवणे चैव पूर्वं हयशिरा हरिः जगाद सामवेदं तु सर्वकिल्बिषनाशनं सिं
धुर्नदी वितस्तायां प्रविशेत्तत्र चैव हि अतोऽर्थं श्रावणे मासि तत्र सर्वार्थसिद्धये कृत्वा संपूजयेद्विष्णुं शंखचक्र
गदाधरम् श्रोतव्यान्यपि सामानि पूज्या विप्राश्च सर्वदा क्रीडितव्यं च भोक्तव्यं तत्रैव स्वजनैः सह जलक्रीडा च कर्त
व्या नारीभिर्भर्तृलब्धय इति अथ श्रावण्यामुपाकर्म निर्णीयते तत्र ऋग्यजुःशाखाध्यायिनां श्रावणपौर्ण
मास्यामुदयकालव्यापिन्यां ग्रहसंक्रान्तिदोषरहितायां ग्रीत्याद्योषधिप्रादुर्भावे सति उपाकर्म कुर्युः बह्वृचां ।
श्रावणमासस्य हस्तनक्षत्रयुक्ते पंचम्यां कुर्युः ग्रहणादिदोषराहित्यमोषधिप्रादुर्भावश्च सर्वेषां तुल्यम् त

१०

ब
ता

ॐ प्र॰ ८५

दुत्सर्जनानंतरदिनपूर्वभागमध्येकर्त्तव्यतः पौर्णमास्याभागस्य सूर्योदयानंतरं प्रारंभोस्ति पूर्वोक्तो वै देवानामित्यु
पाकर्मणो दैविककर्मत्वात् प्राधान्येन पूर्वाह्णः कालः तत्र ऋग्यजुःशाखाध्यायिनां श्रावण्यां पौर्णमास्यामुदय
कालव्यापिन्यां ग्रहसंक्रांतिदोषरहितायामित्यादि पूर्वमुक्तं अधीयंत इत्यध्यायाः वेदास्तेषामुपाकर्म प्रारंभसं
स्कार इति कश्चित् श्रावण्यां श्रावणीकर्म यथाविधि समाचरेत् उपाकर्म तु कर्त्तव्यं कर्कटस्थे दिवाकरे सिं
हे रवाविति विशेषः छंदोगानामन्यथैवं न वाक्यविरोधः स्यात् हस्तर्क्षेण युक्तपंचम्यां श्रावण्यां श्रवणेन चेत्
गोभिलः पर्वण्योदयिके कुर्युः श्रावणीं तैत्तिरीयकाः बह्वृचाः श्रवणे कुर्युर्हस्तर्क्षे सामवेदिन इति केवलहस्ते
चित्रायुक्ते वा एतेषां स्वस्वगृह्यानुसारेण व्यवस्था यदा तु श्रावणे मासि उभयो न प्रादुर्भवति ग्रहसंक्रां
न्तिदोषो वा स्यात् प्रतिबंधकांतरेण वा श्रावणमासातिक्रमः तदा प्रोष्ठपद्यां कार्यम् प्रोष्ठपद्यां भाद्रपदपौ।
र्णमास्याम् तथा च मनुः श्रावण्यां प्रोष्ठपद्यां वाप्युपाकृत्य यथाविधि युक्तश्छंदांस्यधीयीत मासान्विप्रोर्द्ध
पंचमान् आपशब्देन भाद्रपद श्रावण हस्तपंचमीनां ग्रहणं बह्वृचपरिशिष्टकारिकास्वपि अपेक्ष्योपध
यस्तस्मिन्मासे तु न भवति चेत् तदा भाद्रपदे मासि श्रावणेन तद्दिष्यत इति अत्रोपधोद्भवः संक्रांत्यादिदोषा।
णामुपलक्षकः अर्द्धः पंचमो मासो येषां ते अर्द्धपंचमाः उपाकर्मप्रभृति सार्द्धचतुरो मासान्कृष्णपक्षमुपा।
केषु स्वाध्यायदिनेषु निवृत्तं स्वाध्यायमधीयतेत्यर्थः पंचार्द्धमासान्षष्ठं वाधीत्योत्सर्जनमिति वसिष्ठः पंचार्द्धष
ष्ठान्वेति हारीतोपि अत्रार्द्धषष्ठान्मासान्नित्ययपक्षः आषाढ्यां कृतोपाकर्मविषयः तदा पुष्यमासस्य पक्षमुप
तस्य सार्द्धपंचमासत्वसंभवात् तथा च श्रावणे ग्रहादिप्रतिबंधके सति भाद्र[illegible]वेदिनामुपाकर्मादि
कालभाद्रपदपौर्णमासी यजुःशाखिनां वाजिसनेयिव्यतिरिक्तानाम् वाजिसनेयिनां तु श्रावणशुक्लपंच।

अपकौष धमइति

८५

हस्तर्द्धयोर्द्विज इति छंदोगाः सामवेदिनः। हस्तनक्षत्रे अध्यायानामारंभं कुर्यात् प्रतिपन्नक्षत्रे विसर्जनं कुर्युः। प्र
कृतत्वात् श्रावणभाद्रपदयोर्हस्ते उपक्रमः पुष्यमास एव विसर्जनम्। पुष्यर्क्षे उपाकर्म परान्हे उत्सर्गः।
प्रातः स्यात् पुनः गोभिलः अध्यायानामुपाकर्म कुर्यात्काले परान्हिके पूर्वान्हे तु विसर्गः स्यादिति वेदविदो
विदुः अयं नियमः सामगानामेव तदन्येषांत्वपराह्णव्यापिन्यां हस्ते पराह्ने उपाकर्म पुष्ये प्रातरुत्सर्जनमि।
ति वरूचपरिशिष्टकारिकासु च पर्वण्यौदयिके कुर्युरुत्सर्गं नैर्ऋतीयकाः। बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रांति
वर्जिते श्रावण इति वा पाठः अत्रापि प्रातः समय उक्तः सर्वोदयपक्षमुत्सर्जने ग्रहणेऽपि निकर्मणि श्रवणे हस्ते च
यजुर्वेदसामगा उत्सर्जनं विदधुः उत्सर्गस्य कालांतरमपि पारस्करः पौषमासस्य रोहिण्यां मध्यमायां वा।
ष्टकायामध्यायानुत्सर्जेरन्निति श्रावण्यां यद्युपाकर्म करणं तदोत्सर्जनं पुष्यमासस्य शुक्लप्रतिपदि पूर्वान्हे य
दि प्रोष्ठपद्यां तदा माघशुक्लप्रतिपदि प्रातः कार्यम् तदुक्तं मनुना पुष्ये तु छंदसां कुर्याद्बहिरुत्सर्जनं द्विजः माघ।
शुक्लस्य वा प्राप्ते पूर्वान्हे प्रथमेऽहनि इति याज्ञवल्क्योऽपि पौषमासस्य रोहिण्यामष्टकायामथापि च जलांते छंद
सां कुर्यादुत्सर्गं विधिवद्बहिर्जः पौषमासस्य रोहिण्यामिति रोहिण्यां युक्तायामन्वष्टकायां तिथ्यां अष्टकायां कृष्णाष्ट
म्यां चाद्येन प्रकारेणोपाकर्म प्रभृत्यध्ययनं कृतं तत्प्रकारमिदानीं परित्यजेत् न तु सर्वात्मने त्यर्थः अत एवोत्स
र्जनानंतरमनुराह शुक्लेषु छंदांसि कृष्णपक्षे चांगानि पठेदिति इत्युत्सर्जनम्। अथोपाकर्म कालः उपक्रमेत
यां तिथिं समनुप्राप्य उदयं याति भास्करः सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु इति देवलेनादित्योदयव्या
पिन्यास्तिथेः संपूर्णत्वाभिधानात् उत्सर्जनानंतरं प्रतिपन्मध्येऽपि क्रियमाणे चेन्न विरोधः याग स्तु प्रतिपत्त्वा

ज्योमचंद्रपु॰ ८६

मिति किंचित्परमत्वये प्रातः षट् घटिका चतुर्दशी हीनी येन्हि त्रुटिवत् सो पौर्णमासी प्रतिपत् एवं पंचपंचाशत् ए
वं संभवेत्तयेण मान्येन तिथिकृत्यं इति दिवोदासेन स्वनिबंधे प्रतिपादितम् युक्तं चैतत् प्रतिभाति एतच्च ग्र
हणाध्ययनं गृहस्थस्यापि संभवति यथाह शौनकः समाहृतो ब्रह्मचारिकल्पेन यथान्यायमितरे यथायोग्य इत्ये
कमिति इतरे ब्रह्मचारिणो यानोपेयी गृहस्थः कालवृद्धौ तूपाकर्मणोप्युत्कर्षो भवति तथाच कात्यायनः
उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणां अधिमासादिवृद्धीनां तदुत्कर्षो युगादिषु यत्तत्रोत्कर्षप्रतिपाद
कस्मृत्यंतरवचनं दशहरासु नोत्कर्षः चतुर्थो युगादिषु उपाकर्माहवक्ष्याम्येतद्द्वयं ह्यस्यादित इति छंदो
गविषयं तेषां हि कालवृद्धावपि सिंहार्केणोपाकर्म यदाह गार्ग्यः सिंहे रवौ च पुष्यर्क्षे पूर्वाह्णे विजने बहिः
छंदोगा मिलिताः कुर्युरुत्सर्गं सर्वच्छंदसामिति संबंधः बहिर्नद्यादौ एतच्च ग्रहणाद्युपश्रवणादौ कार्यं
हष्टे दोषश्रुतेस्तथा स्मृतिश्च उपाकर्म कुर्वंति क्रमात्सामयजुर्विदः ग्रहसंक्रांतिदुष्टेषु दुस्सश्रवणपा
वेषु संक्रांतौ ग्रहणे चैव सूतके मृतके तथा गणकानं न कुर्वीत नारदस्य वचो यथा अथ वेदोषसंयुक्ते।
पर्वणि स्यादुपक्रिया दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन् द्विजातयः नतु पर्वणि ग्रहणे सति त्रयोदश्यां चतुर्दश्यां
वा श्रवणे तत्रे ग्रहणवेधदूषितत्वाद्द्वैरुपाकर्म न कार्यम् वेधश्च स्मृत्यंतरोक्तः यथा त्रयोदश्यादितो व
र्ज्याः दिनानां नवके शुच मंगलेषु समस्तेषु ग्रहणे चंद्रसूर्ययोः द्वादश्यादितृतीयांतो वेध इंदुग्रहे स्मृतः राका
दश्यादितः शौरे श्रुतः पर्वतः प्रकीर्तितः इति रविग्रहे तयोः प्रोक्तमुभयत्र दिनत्रयमिति दिनत्रयग्रहणात्
तरेच अनंतरत्रयोदश्यामपि श्रवणं तु वेधदूषितत्वा तुपाकर्म न कार्यमिति एवंच उपाकर्मणि वेधदोषा
भावात् यथा नित्ये नैमित्तके जप्ये होमयज्ञे क्रियासु च उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते इत्युप

सर्वग्रहे

13

मी तथा च स्मृतिमहार्णवे यदि स्यात् श्रावणीपर्व ग्रहसंक्रान्तिदूषितं स्यादुपाकरणं ग्राह्यं कार्यं पंचम्यां श्रावणस्य तु।
तत्रैव वचनांतरम् संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते उपाकृतिस्तु पंचम्यां कार्या वाजिसनेयिभिरिति सा
मगानां तु भाद्रे हस्तयुक्तापंचमी हस्त एव वा प्रोष्ठपदी हस्तेनोपाकरणमिति गोभिलवचनात् प्रोष्ठपदीप्राप्तेत्वा
र्षः महार्णवः संक्रान्तिर्ग्रहणं चापि यदि पर्वणि जायते तन्मासे हस्तयुक्तायां पंचम्यां वा तदिष्यते वा इति अत्र ह
स्तयुक्तायां पंचम्यां व्याकुर्वते केचित् तन्न प्रोष्ठपद्यां पंचमीहस्तेनेति गोभिलवाक्यविरोधात् हस्तर्क्षे सामवेदिन इति।
प्रकृतिप्रयुक्तहस्तशब्दवैयर्थ्याच्च तस्माद्धस्तयुक्तायामस्वातियोपंचम्यां वा इत्ययं विकल्पो युक्तः एतच्च वाजि
सनेयिविषयमिति केचिद्वर्णयंति अन्ये तु सर्वेषां श्रावणोक्तपंचम्यामेव चेति तदुक्तम् तथा सति श्रावणे
प्रोष्ठपद्यां चेत्यादिमन्वादिवाक्यानां निरर्थकत्वं भवेत् तस्माद्धस्तश्चाश्रावण्यां यजुर्वेदिनः प्रोष्ठपद्यां छंदोगाः
हस्तर्क्षे कुर्युरिति आषाढ्यां चोपाकृत्य छंदांस्यधीयेतेति अत्र केचिदाहुः आषाढ्यां तूपाकर्म यजुःशाखिना
मेव विहितं सर्वशाखाधिकरणेति न्यायेन कर्मण एकत्वात् बौधायनोक्तत्वेन पारस्करमविरोधवदिति वचनाच्च
यजुःशाखिनामेवाषाढ्यामेवोपाकर्म वेदितव्यम् बह्वृचां छंदोगानां च कस्मिंश्चिच्छाखाविशेषे आषाढे मा
स्युपाकर्मविरुद्धाद्दर्शनादिति तदुक्तम् तेषामपि क्वचिच्छाखाविशेषे अंगग्राहकतया निषेधाभावात् सर्व
शाखाप्रत्ययमेकं कर्म पारस्करमविरोधयदिति न्यायेन च कर्मादाषाढ्यां तन्मासि श्रवणे हस्ते वा उपाकर्मप्रा
प्तिः स्यात् अन्यथा तेषां विहिताकरणेन प्रत्यवायः प्रसज्येत अत एव स्मृत्यर्थसारे उक्तं कस्मिंश्चिद्दिने ग्रहसं
क्रांतिवर्जिते काले कर्मणो न लोपो नोत्कर्ष इति अत्र ग्रहसंक्रांतिदूषिते पर्वण्युपाकर्म निषिद्धं ततश्चोत्सर्जन
नष्टितर्पणं स्यादित्याचक्षते भविष्यति ग्रहणे प्रातःकाले वेधोपि न संभवति तत उत्सर्गपरित्यागे मूढविचिंतन.

ॐ म० चं० प्र०
११२

ज्ञास: पूर्णिमायामर्चयेद्द्विजे गात्राभ्यंगशिरोभ्यंगमधुमांसमैथुनतांबूलान्नवादं ग्राम्यगीतवाद्यान्त्यसमीदृणादि
वर्जयेत् ततो वधुभिर्भुंजीत एतद्व्रतं जन्मप्रभृति कृतपापं व्यपोहति सत्यमेतन्न संदेह स्त्रीर्थेषु च विशेषत: पंच स्वपि।
दिनेषु भीष्मायार्घं दद्यात् तत्र मंत्र: ॐ सत्यव्रताय शुचये गांगेयाय महात्मने भीष्मायैतद्ददाम्यर्घमाजन्मब्रह्मचारि
णे। वसूनामवताराय शंतनोरात्मजाय च अर्घं ददामि भीष्माय सोमवंशोद्भवाय च वैयाघ्रपद्यगोत्राय सांकृत्यप्रव।
राय च अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे इति मंत्रत्रयेण पितृदानविधिनात्र यो वर्णो वृत्तिन स्त्ववश्यं नियमे।
न भीष्माय जलं दद्यु: व्रतमेतद्धि परमं महापातकनाशनम् व्रतकृन्नरमं स्थानं हरे: प्राप्नोति निश्चितम्॥ इति
भीष्मपंचकम्॥ ॥इति कार्तिककृत्यम्॥ अथ मार्गशीर्षकृत्यमाह महाभारते मार्गशीर्षं तु यो मासमेक
भक्तेन संक्षपयेत् भोजयेच्च द्विजान् शक्त्या स मुच्येद्व्याधिकिल्बिषै: धनवान्मतिमा- न्वाग्मी धनाढ्यश्च प्रजा।
पते वामने च खरोष्ट्राश्वनरा गाव: शाकटानि अजाविकम् दानवंके शावप्रीत्ये मासि मार्गशिरे बुध: इति
मार्गशीर्षकृत्यम् अथ पौषकृत्यम् तदुक्तं महाभारते पौषमासं तु कौंतेय एकभक्तेन य: क्षपयेत् सुभगो दर्शनी
यश्च यशोभागी च जायते इति पौषकृत्यम् ॥अथ माघकृत्यम् तदाह विष्णु: माघे मास्यग्निं प्रत्यहं घृततिले
र्हुत्वा स घृतकृशरान् ब्राह्मणान्भोजयित्वा दीप्ताग्निर्भवतीति भविष्योत्तरे च पौर्णमास्याममायां वा प्रारभ्य स्नानमा।
चरेत् त्रिंशद्दिनान्युत्थानि मकरस्थे दिवाकरे अप्रावृतशरीरस्तु य: कश्चित्स्नानमाचरेत् पदे पदेऽश्वमेधस्य फ
लं प्राप्नोति मानव: एवं स्नानावसाने भोज्यं देयमविचारितम् भोजयेद्द्विजदंपत्यं भूषयेच्च ... रिति वाम
नेपि माघमासे तिला: शस्तास्तिलधेनुश्च दानत: इध्मं धनादयश्चान्ये माधवप्रीणनाय च कौशेयानि सर्ववारीण
समुद्रा: सरितस्तथा पुनीम: सर्वपापानि त्रिविधानि न संशय: इति नारदीयेपि रवावुदिते कोपि जले स्नायो
यथाविधि तत्स्नानं मुनिभि: प्रोक्तं किंचित्पापदिनामपि पद्मपुराणे गंगाश्रितजले विशेषमाहात्म्यमित्यादि सरि

15

११२

ओ

16

शुक्लस्याग्रे पन्नगमम् विष्णुलोकमवाप्नोति मत्स्याभ्यर्च्य जनार्दनम् पयो वै त्वानि पत्राणि मृणालकमलानि च सप्त
म्यादौ नरः कृत्वा एकादश्यामुपावसेत् कार्त्तिकस्यामले पक्षे लक्ष्मीप्रदमिदं व्रतम् केशवं च समभ्यर्च्य वैष्णवीं गा
तिमाप्नुयात् गृहस्थो वा यतिर्वापि वनस्थो वापि भिक्षुकः कृच्छ्रेण कृच्छ्रमाप्नोति तद्विष्णोः परमं पदम् ॥ अथ भीष्मपंच
कम् ब्रह्मपुराणे नारद उवाच मया वर्षसहस्रं तु समभ्यर्च्य जनार्दनम् प्रकाशं व्रतं चैतत्सर्वयज्ञफलप्रदम्
नारदो भृगवे प्राह भृगुरौशनसे कथि इत्याद्यनेकर्षिपरंपरागतम् ततो भीष्माय कथितं तुष्टेन चक्रपाणिना
प्रवृत्ते घोरसंग्रामे भक्तियुक्ताय सुव्रत एकादश्यां प्रगृह्णीयाद्व्रतं पंचदिनात्मकम् व्रती स्नात्वा विधानेन मध्या
ह्ने तर्पणं नरः इत्यादि वाक्योक्तो विधिः संक्षेपेणोच्यते अथात्र प्रातर्मध्याह्ने च नदीषु स्नानं मृद्गोमयेन वा देहस्ना
नं कृत्वा विधेयम् ततो देवादीनां तर्पणम् ततो विष्णुपूजनं कृत्वा मौनं कुर्यात् धौतवासा जितेन्द्रियो हरिमेव पूज
येत् पंचदिनात्मके व्रतेऽखंडदीपं दद्यात् हव्यास्वं तद्दिनेऽर्घं दत्वात्मनि योजयेत् ॐ नमो देववदेवाय इति जपेद
ष्टोत्तरशतम् जुहुयात्तिलसंयुक्तं घृतं व्रीहींस्तु व्रती षडक्षरेण मंत्रेण स्वाहाकारेण कारयेत् अथ विशेषपूजा
विधिः प्रथमदिने कमलैर्हरेः पादौ पूजयेत् द्वितीये बिल्वपत्रैर्जानुनी २ तृतीये जातं गंधेन नाभिं तुलसीदलैः ततो
जातीपुष्पादिभिर्नाभेरूर्ध्वं स्कंधौ यावत् ततो मालतीकुसुमैः शिरः संपूजयेत् इति प्रतिमायां पूजाविधिः तत्रैका
दश्यां हरिं पूजयित्वा तद्दिने स्थित्वा मंत्रवद्गोमयं पिबेत् द्वादश्यां च मंत्रवद्गोमूत्रं प्राशयेत् त्रयोदश्यां तु क्षीरं
चतुर्दश्यां गोघृतम् पूर्णमास्यां गोदधि मंत्रवत्प्राश्य एवं पंचदिनानि लंघयेत् षष्ठे तु दिवसे स्नात्वा विधिवन्नारद
प्रदिश्य ब्राह्मणान्भक्त्यान्नेन भोजयेत् कृष्णपांडवभीष्मार्थं च पृथक् २ भोजयेत् अथ पंचस्वपि दिनेषु विशेषमा
ह नैदायां कांचनं दद्यात् द्वादश्यां वस्त्रयुग्मं गोदानं च त्रयोदश्यां रिक्तायां घृतपायसम् सितासिततिलाला

उ
ॐ चं॰प्र॰ सविशेषइति मासविशेषाणामनुकरणेन वैफल्यं कर्तव्यं मासेकेनोच्यमित्यादिकं वर्जयेत् ज्योतिःशास्त्रे तत्र
१३ दत्तमदत्तं स्याद्धुतं चाहुतमेव च भुक्तं ग्रामप्रवेशं सान्नोपवासः कृतो भवेत् न यात्रा न विवाहं च न च वास्तुनिवे
शनम् न प्रतिष्ठा च देवानां प्रासादग्रामभूरुहाम् नाहिरण्यम् वा मासि सिकौरयेद्दिनं निश्चयः पराशरः रवि
णालंघितो मासः श्राद्धः ख्यातो मलिम्लुचः तत्र यद्विहितं कर्म तन्न मासिकारयेत् शातातपः अस्तगे च गुरौ
शुक्रे वृद्धे बाले मलिम्लुचे व्रतारंभोपवर्गो च न कुर्यात्कौन्तिवेधनं गार्ग्यः नामान्नप्राशनं चौलं विवाहं मौंजि
बंधनं निष्क्रमं जातकर्माणि काम्यं हृष्टविविसर्जनम् उद्यापनम् पारंभं सूतानां नैव कारयेत् नामस्वका
लकृतं जातकर्म तातेष्टिः तदाह गार्ग्यः नामकर्म च जातेष्टिं यथाकालं समाचरेत् अधिमासे न कुर्वीत।
प्रथमाब्दपिण्डदानाम् वापीकूपतडागादि प्रतिष्ठायज्ञकर्म च न कुर्यान्मलमासे पितृशोके न यावत्सगे मास्ये
आधानं यज्ञकर्माणि प्रायश्चित्तं व्रतानि च न कुर्यान्मलमासेपि कृकलासो रूपजन्तेरिति प्रायश्चित्तं हाद॰
शाब्दषडब्दादि स्मृतिसंग्रहे आरंभं दर्शपूर्णमासयोरग्निहोत्रस्य चादिमम् प्रतिष्ठां पंचकर्मोद्यामलमासे
विवर्जयेत् इति प्राथमिकदर्शपौर्णमास्यागादि विवर्जयेत् प्रासंगिकमुच्यते रविसाक्रान्तिविषयमन्येषां
पत्राणामस्तमुच्यते तत्रोर्वाक्वार्धिकमेसादृढ्याल्यत्वकीर्तितम् बाल्यादिकालपरिमाणो बृहस्पति
राह प्राक्पश्चादुदितः शुक्रः पंचसप्तदिनानि शिशुः विपरीतं तु वृद्धत्वं तद्देवगुरोरपीति प्राग्गतः प
श्चाद्गतस्त्रिनयसितः स्यादित्यादिविशेषमाह श्रीपतिः देशभेदेन च विशेषमाह गार्ग्यः शुक्रोदयः प्राक्
प्रसवाश्ववालो हृक्षोदशार्वति षट्सप्तरात्रम् बंगेषु हूणेषु च षट्चपंचदशैव रोमे त्रिदिनं वदन्ति यदत्र
वर्ज्यं तन्मलमासोपवर्ज्यमिति ज्ञेयम् वक्रातिचार सिंहराशिगतो गुरुः रसंगतः इव कृष्णकर्मणा वर्ज्यः

17

चर्मोभयमुख्यादिमहादानं महदादिशब्देन गृह्यत इति गुरुभार्गवबाल्याद्यव्ययेन निषेधः आदिपदेन बालत्व।
ग्रहणम् स्कन्दपुराणे अनाहिदेवतां दृष्टपूर्वाचि:स्पूर्वे भार्गवे मलिम्लुचे व्यनाहृत्तनीर्थस्नानं विवर्ज
येत् वापीकूपतडागादिप्रतिष्ठां यज्ञकर्म च न कुर्यान्मलमासे विमहादानव्रतानि चेति महादानानि
मत्स्यपुराणे मनूक्तानि तुलापुरुषो हिरण्यगर्भो ब्रह्माण्डकल्पपादपगोसहस्रहिरण्यकलशधेनुहि
रण्याश्वहेमहस्तिरथपंचलांगलधरादानविश्वचक्रकल्पलतासप्तसागररत्नधेनुभूतघटसंज्ञकानि अ
नुक्रमेणैतानि कूर्माण्डदशकनकाश्वतिलानागमहीरथगृहाणि च कं वै तं कपिला दासी। कन्यकाइ
महादानानि वै दश काठकगृह्येपि चूडामौंजीबंधनं च आधानं महालयश्च राजाभिषेकं काम्यं च न कु निवा =
र्यात्त् लंघिते हारीतोपि अधिमासे न कर्तव्यं श्राद्धं नाभ्युदयं तथा न चैव काम्यं यत्कर्म वत्सरात्प्रथमा
हते सपिंडीकरणादूर्ध्वं यत्किंचिन्मासिकं भवेत् इष्टं वाप्यथवापूर्वं तन्न कुर्यान्मलिम्लुचे आभ्युदयि
कं श्राद्धं मांगल्यव्रतेनरगतजातकर्मादिनिमित्तं व्यतिरिक्तं प्रथमाब्दे मलमास संभवे यत्सपिंडीकरण
मुक्तम् तदुत्तरदिने चाभ्युदयिकं तन्मलिम्लुचे कार्यम् नान्यत् काठकगृह्यपरिशिष्टे मले नान्यगतिकु
त्यते र्यान्निमित्तां क्रियाम् सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे उत्सर्गाग्न्याधानकर्मस्वादिकान्य
पि महालयाष्टकाश्राद्धे पाकर्मोद्यकर्म च स्पष्टमास्यविशेषाख्या वहितं वर्जयेन्मले दुर्भिक्षे आग्रयणमा
वश्यकं जीवनायश्यामाकैरपि कार्यम् दुर्भिक्षाभावे श्यामाकैर्न कार्यं अन्यावश्यकत्वादल्पमेव ग्रास
मेव पैठीनसिः संक्रान्तिरहिते मासि कुर्याद्दाग्रयणं न चेति कल्पतरौ महालयो भाद्रापरपक्षस्पष्टमा
कौ

नमो

ओम् चं०प्र० श्चुन दशम्यादौ नवम्यपरभागे अत्रादिनभौक्तिके लग्नु संविधेयम् तथा चैत्रकृष्णदशम्यादिदि

१३६ नेष्वर्कोगदृशौनो रवौ मेषंगते स निमिथुने दर्शोदयं च भवेत् आषाढस्य द्विराषाढोऽधिकाषाढो यथा

र्थः अस्यार्थः चैत्रकृष्णदशम्यादिदिनेषु दर्शोदवौ चीनेषु रवौ मेषगते स निमिथुने दर्शोदयं

भवेत् ततो रवौ मिथुनस्थे सति दर्शोदयं स्यादिति निपातवत् तदाषाढमासस्य द्विराषाढ इत्यसौ॥

द्विराढ्ने आषाढो यथार्थः तदान्वयो द्विराषाढ इत्यर्थः अन्यच्च चैत्राषाढान्यमासेषु पंच

स्वेकत्र मासि चेत्तिथौ दर्शाव एकसंक्रान्तौ गतौ एतौ आषाढ एव तत् एवं तत एकसंक्रान्तौ दर्शद्वययो

गात -------- इत्यर्थः मिहिरः योयत्क्रोऽद्विराषाढो नान्यः स्यादधिमासतः संज्ञाभेदास्स

एवोक्तो विवेकं शयने हरेः द्विराषाढोक्तिप्रसंग        द्विराषाढविकल्पोऽयं वैकुंठशयने

प्रति उत्थापने तु शाकस्य सिंह एवावतिष्ठति कथमस्य हरिशयनार्थेत्वमिद्ध ॥मो

गामिन्यपि वत्सरे दृढ एव हरिस्वापक कर्कटादित्रिके यदि मिहिरः मेषादिमिथुने

नेतु यदा दर्शद्वयं भवेत् अब्दान्तरे तदावश्यमेकादश्यां हरिः स्वपेत् अत्र सर्वत्र प्रतिसंक्र

मणं दिन वृद्ध्या स्वयं एव वस्थेयात् संधेयमित्यनवद्यम् ॥ ७ ॥ ७॥ दुर्गोत्तुपाध्याय।

द्विरा

१७

१३६

तथा नीचस्थे वक्रस्थेस्थिते चरणगते वाल वृद्धास्तगे वा सन्यासो यज्ञयात्राव्रतनियमविधिर्यज्ञकै
र्मादिदीक्षा मौंजीबंधो गमनानां परिणयनविधिर्वासुदेवप्रतिष्ठावर्ज्यं सद्भिः स्त्रिदशपतिगुरौ सिं
हराशिस्थिते वा उद्यापनं च ज्ञा व्रतबंधदीक्षा विवाहयात्रा च वधूप्रवेशः तडागकूप त्रिदशप्र
तिष्ठा वृहस्पतौ सिंहगते न कुर्यात् गोदावरीयात्रा स्नानं तु तापि कार्या तीर्था वा च गयायां वायु
पुराणे विशेष उक्तः तथा हि गयायां सर्वकालेषु पिंडं दद्याद्विचक्षणः अधिमासे जन्मदिने अ
स्ते च गुरुशुक्रयोः न कर्त्तव्यं गया श्राद्धं सिंहस्थे च वृहस्पतौ इति श्राद्धस्य यात्रापूर्वकत्वात् राज
याचाप्यत्र विहितैवेति विशेषमशेषम् अथान्तरमासकार्याणि उपाकर्मोत्सर्जने च पवित्र।
दमनार्पणम् अवरोहश्च हेमंतः सर्पबलिर्म्लानाशकाः ईशानस्य वलिर्विष्णोः शयनं प
रिवर्त्तनम् दुर्गेंद्रस्थापने यामे कुंभस्थानं च वर्जितम् पूर्वं च प्रतिषिद्धानि परत्रान्य च वदे।
विकम् उपाकर्म आरंभः उत्सर्जनं समाप्तिः हिरण्यादोपि अधिमासभेदश्च तदुक्तम्
अधिमासप्रभेदोयं हिरण्यादोपि संयमः इति सहिताषाढः किं तल्लक्षणः तत्रापि हि मा
रीचिः कुम्भपतेर्दशम्यादौ मेषं गच्छेद्दिवाकरः हिराषाढः सविज्ञेयः प्रोनेक कोटगो।

पत्ताभयस्यपुत्रेणश्रीचंद्रमसाकृतेस्मिन् चंद्रप्रकाशेतुनिबंधमौलौमलिम्लुचोवाचि
विनिर्णयोयम् ॥ हृद्दादृशोंयेषांविशतिनयनेमत्सरदृशांहृदंभोजेयेषांविकसतिप
रोक्षकेकिरणैर्मनोदुर्ध्यांमोधिनरलयतुनेषामयमनः प्रकाशश्चंद्रोस्यैषणत्रापितकृति
नायंनिजगुणैः १ चंद्रप्रकाशेप्रथितेनिबंधेकलाभृतश्चंद्रमसोबुधस्य जागर्त्तुसदाचार
विचाररम्यउहृत्सुसद्मासीदमलस्तुरीयः २ इतिश्रीचंद्रमोमिश्रकृतौनिबंधचूडामणौ
चंद्रप्रकाशेचतुर्थउल्लासः पूर्णतामितः । शुभमस्तु ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥
गुरुभ्योनमः श्रीमद्विक्रमपत्तवंधनृपतेःश्रीखंडीनिचोस्वाचेतो वर्षेवक्रहहस्त्रिचंदिरमितेभाद्रार्द्र
नेकार्त्तिके सद्भावेचतिहालसिंहनृपतेर्विद्वज्जकोरोत्सवंगोविंदोकुलिलेखकर्त्तृनगरेचं
द्रप्रकाशंद्विजः १
सपिंडीकरणादूर्ध्वंयावदब्दत्रयंभवेत् तावदेवनमोकव्यंतपाहेनकदाचन ॥ =